कविहृदयाय

संस्कृतानुरागिणे

दिल्लीविश्वविद्यालयस्य

उपकुलपतये

श्रीमते डा० चि० द्वा० देशमुखमहोदयाय

सादरं

समर्प्यते

अयं कवितासंग्रहः ।

# शुभाशंसनम्

डा० कृष्णलालकृतं "शिञ्जारवं" निपीय नितरां मोदते मे चेत: । अस्मिन् प्रशस्ये कवितासंग्रहे विविधकल्पनानिम्नगानां स्रोतांसि विनदन्ति । यद्यपि संग्रहस्य ४३ तमे पृष्ठे कवि: कथयति—

"बाणोच्छिष्टं जगत् सर्वं स्पृष्टं च कालिदासेन ।
नवीन: किं कवि: कुर्यात् भक्षितं भवभूतिना ॥"

तथापीदं वक्तुं शक्यते यन्नवीनकविना डा० कृष्णलालेन प्रणीताभ्य: कविताभ्यो नवीनामोद आयाति । अत्रेदं विशेषत उल्लेखनीयमस्ति यदासु कवितासु कवेरुदात्ता भावा एव प्राधान्यं भजन्ते । शब्दाडम्बरस्तु दूरत एवापास्त: । आर्जव-वैशद्य-गभीरत्वादय: कवेश्चरित्रगुणा अप्यासु कवितासु स्पष्टं विलक्ष्यन्ते। नवीनकवेरयमाद्य: प्रयास: सर्वथा प्रशंसनमर्हति । आशासे डा० कृष्णलालस्य कवित्वमुत्तरोत्तरं वर्धिष्यते सहृदयांश्च भूयो भूयो मोदयिष्यते ।

चण्डीगढे
१६-१-१९६६

**रामगोपाल:**
(पंजाबविश्वविद्यालयीयसंस्कृतविभागे रीडर:)

# भूमिका

डाक्टरकृष्णलालमहोदयेन प्रणीतं शिञ्जारवाख्यं कविता-संग्रहं स्थालीपुलाकन्यायेनाहं यत्र तत्राऽवालुलोकम्। दशवर्षाभ्यन्तरे विरचिता एकषष्टिसंख्याकाः कविता अत्र संगृहीता विद्यन्ते। एकतः संग्रहेऽस्मिन् कुत्रापि विवेकानन्दं लाजपतरायं वा प्रति श्रद्धाञ्जलिः, कुत्रापि सहृदयहृदयावर्जकानां प्राकृतिकदृश्यानां चित्ताकर्षकं चित्रणम्, कुत्रापि कङ्कालस्यापि सौन्दर्यवर्णनम्, कुत्रापि च पञ्चचा-मरेण छन्दसोद्बोधनमित्येतादृशा भूयांसोऽभिनवा विषया नयनगोचर-तामागच्छन्ति; अपरतश्च छन्दःशृङ्खलाबन्धशून्याः कविताः सद्य एव संस्कृतज्ञस्य सचेतसः पाठकस्य चेतो बलादावर्जयन्ति। संस्कृत-भाषयाऽद्यावधि प्रायशो याः कविताः कविभिर्निरमायिषत ताश्छन्दो-भिर्निगडिता एवाभवन्। डाक्टरकृष्णलालमहोदयेन संस्कृतकाव्य-परम्परायां योऽयमभिनवः पन्थाः प्रदर्शितस्तदर्थं संस्कृतजगतः पक्षतो दिष्ट्या हृदयेनाभिनन्दामि। मन्ये लेखकमहोदयेन महता श्रमेण काव्यसंग्रहमिमं विरचय्य स्वयमेव प्रकाशतामानीय संस्कृतं प्रति स्वकीय एकान्तः प्रेमा प्रकटितः। संस्कृतसाहित्यरसरसिका विद्वांसो-ऽस्यापि काव्यसंग्रहस्य ललितां पदावलीमास्वादयिष्यन्तीति द्रढीयान् मे प्रत्ययः।

रसिकविहारी जोशी
(दिल्लीविश्वविद्यालयीयसंस्कृतविभागस्य अध्यक्षः)

दिल्लीनगरे
२४—१—६६

# किञ्चिद् वक्तव्यम्

संसारे काठिन्यमार्दवयोः नवीनपुराणयोश्च संसर्गेणैव जीवनं सम्यक् प्रवहति । तदेव तथ्यं मनसि कृत्वा अस्मिन् कवितासंग्रहे मया उग्रशब्दार्थयुताः कोमलपदार्थगुम्फिताश्चोभयविधा एव कविताः सन्निवेशिताः । तच्चास्य संग्रहस्य श्लिष्टेन शिंजारव इति नामपदेन ध्वन्यते । शिंजा--प्रत्यञ्चा, शिंजा—नूपुरध्वनिः इति । इदं च मम कन्याया अपि नाम । अस्मिन् संग्रहे मया संस्कृतेऽपि अन्यभाषाकवितावत् नवाः प्रयोगा विहिताः । तथा च छन्दोमुक्ताः काश्चन कविता अत्र सहृदयानां दृग्गोचरीभविष्यन्ति । आसां कवितानां रचनायां मम जीवनसहचर्याः शशिप्रभाया यत् प्रेरणं तदर्थं मे किमपि कथनमात्मश्लाघैव स्यात् । दिल्लीविश्वविद्यालयस्योपकुलपतिना डा० चि० द्वा० देशमुखमहोदयेन समर्पणानुमत्या, दिल्लीविश्वविद्यालयीयसंस्कृतविभागाध्यक्षेण डा० रसिकविहारीजोशीमहोदयेन भूमिकालेखनेन, पंजाबविश्वविद्यालयीयसंस्कृतविभागस्य रीडरपदमधिष्ठितेन गुरुवरेण डा० रामगोपालमहोदयेन शुभाशंसनलेखनेन यो मय्यनुग्रहो विहितस्तदर्थं हार्दिकीं कृतज्ञतां प्रकटयामि । आवरणपत्रे चित्रार्थं श्रीमते कैलाशविद्यालङ्काराय, मुद्रापणार्थं च परममित्राय संस्कृतसेवकाय श्रीमते कैलाशचन्द्राय भूयो भूयो धन्यवादं व्याहरामि । अयं मे प्रथमः प्रयास इति सत्स्वपि महाकवीनां काव्येषु इममपि नवीनं कवितासंग्रहं पठित्वा भवन्तो मां प्रोत्साहयिष्यन्तीत्याशासे । अन्ते च केवलमेतद् निवेदयामिः—

अधिगतमिह किंचिद् यन्मया जीवने तत् परमगुरुकृपायाः सत्फलं सम्मतं मे ।
वपति हि भुवि बीजं स्नेहबन्धेन माली फलति तदपि सम्यक् तस्य संरक्षणेन ।।

मम च सुहृद एतत् सत्सु युष्मासु भाग्यम् अतिशुभहृदयाशंसाभिरुत्साहितोऽहम् ।
सति हि भुवि सुबीजे मालिना रक्षितेऽपि, विकसति न समीरासङ्गमप्राप्य पुष्पम् ।।

मम तु भवतु सर्वं वित्तमैश्वर्यसारं, विविधकलकलासु ज्ञानवृद्धिः सदा स्यात् ।
प्रसरतु जनमध्ये गीतबद्धं यशो मे, परममलमनो मे वर्ततां दर्पशून्यम् ।।

कवितानामन्ते प्रमादात् खिस्तसंवत्सरक्रममनुसृत्य तिथयो मुद्रिताः, तदर्थं क्षन्तव्योऽयं जनः,

तिथिः—
वि० स० २०२२
माघशुक्ला वसन्तपञ्चमी
(गणतन्त्रदिवसः)

सहृदयानां वशंवदः
कृष्णलालः

# अनुक्रमणिका

क्रमांक : पृष्ठांक :

क्रमांक : | पृष्ठांक :

# देहि मे वरं शारदे

देहि मे वरं मातर्देहि मे वरं शारदे ।
जीवनं मे मरणमपि स्याद् भारते भारते ।।

स्फुरतु मयि बुद्धिप्रदे बुद्धिरेवंविधा ।
तवामलं गौरवं या प्रगायेत् सदा ।।

उदेतु शक्तिर्मयि शत्रुजेतृप्रिये ।
शक्तो यथा स्यां रक्षणे ते श्रियै ।।

अभयं देहि मेऽभयदे वेदमातः ।
भवेद्विघ्नचिन्ता न सायं न प्रातः ।।

हे उदारेऽखिलधर्मशर्मप्रदे ।
आशिषा ते भवेद् भ्रातृभावो मुदे ।।

कुकर्माणि शोधय मे पावनि ।
सच्चरितैर्यथा स्यात् समृद्धावनिः ।।

मातः समुद्धर मामद्य पुण्ये ।
त्वामेव दैवं मन्ये शरण्ये ।।

***

# स्मृतिः

अलङ्कारभूता धरणीजनन्या
गता विश्वपारं पुरुषाः सदेहाः ।
परं वाग्भिरद्यापि तथैव तेषां
धरा कल्पिताभूषणपुञ्जदेहा ॥

स्मृतिर्यावदागच्छति हृद्विभागे
दिवंगामिनां कालक्रमेण पुण्या ।
तथैवानुयामो यदि वर्त्म तेषां
मनस्तावदेवैति सुखं विबुद्धम् ॥

(२३-६-५४)

***

# केशप्रसाधनम्

केशप्रसाधनं न कुरु प्रिये,
अनया तव मुक्तया वेण्या
सान्ध्ये ऽपि तेजसि
लोहितायमाने
स्मितिं प्रददति अन्तिमां
जगन्मण्डलाय श्रान्ताय ।

अथवा नियोजयति कार्ये
जनानुदयति भास्वरे
सौवर्णे प्रफुल्लिते तमोहारिणि
कृतचन्द्रनिगरणे
धक्ष्यति प्रतिकणं प्रभाकरे,
अनया प्रिये तव सघनया
वेण्याऽतिश्यामया
स्फुरन्त्या मन्दानिलस्पर्शेन
अकाल इव हन्त
मम नेत्रयोराकाशे
आच्छादितो भवति जीमूतो
मयूरश्च नृत्यतीव बर्हैः

स्फुरितरुचिभिः प्रसारितैर्
घनेषु निभृत इव दृश्यते मुख-चन्द्रमाः ।
कम्पते मे हृदयं छिन्नं
तीक्ष्णैः शरैरिव न जाने कस्य ।
विचारयामि तदा—
किमद्याकालघनजाले प्रलय आगतः ।
अथवा पतिष्यति कस्मिन्नपि
भाग्यशालिनि भाग्यहीने वा
तडिल्लता असिपत्रसदृशी ।
अथवा महान् जायते
भूविप्लवोऽनवरतधारया मेघस्य ।
न जाने किं भविष्यति ।
परन्तु प्रिये, मा कार्षीः
केशप्रसाधनम्
केशविमोचनम् ।

(१२-५-५५)

***

# श्रीप्रतापस्तोत्रम्

महाटवीनिवासकृन्नराधिपोऽपि यः सदा
स्वदेशगौरवे रतः स्वदेशरक्षणे रतः ।
धराशयो दृढव्रतो विदेशिनो न्यकासयत्
प्रतापिनं नमामि तं प्रतापसिंहनामकम् ॥१॥

स चेतकः प्लवङ्गमस्तुरङ्गमो हि भाग्यवान्
यदीयपुष्टपृष्ठविष्टरे हसन् स भास्करः ।
सुपूजितः स्वदेशिभिः सदा मधूद्यमैरिव*
व्यनाशयन्मुगूलमत्सराञ्ज्वलत्करैरिव ॥२॥

समुत्थितैश्च हल्दिघाटियुद्धभूमिरेणुभिः
कृताम्बरभ्रमद्घनान्धकारघोरदुर्दिनैः ।
व्यराजताङ्गणं हि तत् प्रतापतप्तकीर्तिभि-
स्तडिल्लतासमानखङ्गविभ्रमैरितस्ततः ॥३॥

---

*यथा सूर्योदयवेलायां कमलेषु विकसितेषु मधूद्यमानां भ्रमराणामुत्सवो भवति, ते च तं सूर्यं पूजयन्तीव तथा श्रीप्रतापसिंहे उदिते स्वदेशिनो हर्षेण तं पूजयन्तिस्म ।

ठकट्ठकट्ठकत्तुरङ्गधूयमानमेदिनी—
भयप्रवृद्धभङ्गिम प्रतापसिंहताण्डवम् ।
विमर्दनाय जायतां स्वराष्ट्रघातिनां द्विषां
पदे पदे जने परस्परप्रभेदकारिणाम् ॥४॥

त्वया वनेऽपि भीषणे विभावरीतमःसरः-
प्रपञ्चमग्नपादपप्रसूनमुग्धजन्तुनि ।
प्रकाशमानहिंस्रघोरदंष्ट्रकालवस्तुनि
प्रजागरेण सिंह हे कुटुम्बिना पदं कृतम् ॥५॥

अहो क्व राजविष्टरे समुन्नतं स्वशासनं
सुवर्णपात्रभोजनं क्व भीषणं वनं परम् ।
न यत्र घासरोटिकाऽपि लभ्यते यथासुखं
जलं न प्राप्यते कुतः पयः शिशुर्लभेत रे ॥६॥

स राजपुत्रवंशमण्डले विभासि भास्करः
स्वतन्त्रतापथप्रदर्शनाय दीपकः पुरः ।
हिमालयस्य तुङ्गशृङ्गचारिविग्रही जयो
यतो हि तत्र दृश्यते हिमं हिमं यथा यशः ॥७॥

त्वया समुन्नतं शिरस्त्वया विभासितं जगत्
त्वया पदेन विष्णुना प्रतिष्ठिता वसुन्धरा ।
त्वयैव पीनवक्षसाद्य भारते सहिष्णुता
त्वयैव बाहुदण्डताडिता बिभेति द्विड्घटा ॥८॥

शिर:प्रदेशवेष्टनं समुच्चभालपट्टकं
सपत्नकोपकारणेन रक्तनेत्रपल्लवम् ।
वृषांसबन्धुरप्रवृद्धपीनवृत्तकन्धरं
स्मरामि वीरवत्सलं प्रतापधैर्यकेतनम् ॥९॥

जय प्रतापसिंह वीर! मातृभूमिरक्षक!
त्वदीयदुर्गभित्तयो वदन्ति प्रस्तरैरिव ।
गरीयसी हि स्वर्गलोकतो जनन्यभीहिता
बिभर्ति या च जन्मभूमिरेव गौरवान्विता ॥१०॥

(६-११-५५)

***

# दिवसाः सुधारुचिरा नताः

चलपल्लवैः स्फुरदङ्कुरैः
पिककूजितैः कलषट्पदैः ।
प्रिय शोभते निखिलं वनं
किमपि द्रुतं करवावहै ॥१॥

तटिनीस्थितैर्नलिनीदलै—
रनुप्राप्य तन्मधुचुम्बनम् ।
तनुवीचयः प्रतिघट्टनै—
रयि कुर्वते झनकिङ्कणम् ॥२॥

भवताच्चिरं भुजबन्धनं
तव मे प्रियं मम ते प्रियम् ।
पथि पादयोरपि सङ्गतिश्
चिरमावयोस्तनुतां ध्रुवम् ॥३॥

तव वीणया सह कण्ठजा
मधुरस्वरा मम सङ्गताः ।
हृदि नर्तनं जनयन्तु हे
दिवसाः सुधारुचिरा नताः ॥४॥

*** (१-६-५६)

# त्वया विना जगत् शून्यम

इमे वाता मदोन्मत्ताः
किसलयानामयं रागः
कूजितं मधुरं खगानां,
प्रफुल्लितान्येतानि तानि
रुचिरवर्णैः स्मितभरैश्च
इङ्गितैरिव कम्पितैश्च
आह्वयन्ति कुसुमानि बाले।
त्वं च दूरं वर्तसे
नैव जाने कुत्र रे।
किमर्थं कथय किन्तु
प्रेषयसि जगतीह सौन्दर्यं
(यतो न त्वद्विना सौन्दर्यकल्पना)
कथं रे स्यादयि मोहिनि,
तृप्तिः सौन्दर्येण त्वद्विरहितेन।
दहति मम चेतो निराधारं
किं करोमि कथं जीवामि !

***

(१७-३-५७)

# पूर्णिमाऽपि ज्वालायते

इयं शारदी पूर्णिमा, कूलमेतत्
सितं सैकतं शीतलं रे समन्तात्
सरिन्निर्मलैरुज्ज्वलैर्वीचिभङ्गैः
पटं राजतं विस्तृतं, वाति वातः ।
परं मे प्रिये प्रेयसि त्वं क्व याता
त्वया शून्यमेतत् समग्रं हि ज्वालाः ॥

(६-१०-५८)

* * *

## वर्षर्तुः

एहि सखेऽयं गच्छति कालः !
मन्दं मन्दं प्रसरति पवनः,
स्पर्शविदोलितरमणीवसनः,
दत्ताह्लादप्रमोदसुशरणः,
अनेन विचलति न कोऽपि न तरुणः ।
न हि प्रत्येति गतोऽयं कालः—
एहि सखे.............. ..............
सौधं धौतं वर्षाधारैः—
र्नवा द्रुमा जाता आसारैः—
र्हरिता दिशः प्रभूतैर्घासैः
कलमधुरवोऽपि नीडावासैः
क्रियते स्वस्थो धावति बालः ।
एहि सखे..... .................. ...
एतस्मिन्नपि कक्षे स्थित्वा,
ग्रन्थपटैः संसारं हित्वा,
रटसि मध्यकौमुदीं नत्वा,
चल रे पश्य बहिस्त्वं गत्वा,
प्रकृतेर्विभवोऽतीव विशालः ।
एहि सखे.............. ..............

***

# उद्बोधनम्

मरुद्विधूतपट्टकप्रचालितैकधार्मिक—
स्वराज्यचक्रशोभिनि द्विषद्विमर्ददण्डके ।
नभस्तलं चुचुम्ब यो निरन्तरं स्वतेजसा
समुन्नते सुभासिनि ध्वजे रतिर्मतिर्मम ॥१॥

यदीयरुण्डमुण्डशोणितास्थिपुञ्जतर्पिता
यदीयसिंहनादतुल्यकण्ठनादगुञ्जिता ।
यदीयतुङ्गबाहुदण्डधैर्यशौर्यगर्विता
यदीयस्नेहदीपिता विराजतेऽद्य मातृभूः ॥२॥

अयि स्वतन्त्रदेशवासिभारतीयबान्धवाः
किमद्य विस्मृताः स्वकीयपूर्वजाः सगौरवाः ।
पुरा किलात्मनो हुतिं प्रदाय मातृभूहिते
विदेशिराज्यबन्धनाद्धि यैरियं विमोचिता ॥३॥

स्वराज्यमस्मदीयजन्मसिद्धवित्तमस्ति भोः
जुघोष यः स्वरेण निर्भयेन शासकान् प्रति ।
तमेव लोकमान्यमस्तकं स्वदेशवत्सलं
नमामि बालजाह्नवीधरं प्रतापिनं शिवम् ॥४॥

कठोरलौहदण्डकल्पकायसन्धिघट्टितं
स्वनामधन्यरञ्जितं स्वकर्मधर्मपूजितम् ।
नमामि लोकवन्दितं पटेलवंशवल्लभं
न येन शान्तिमिच्छता स्वशासनं विभञ्जितम् ॥५॥

त्वमाङ्ग्लक्रूरशासने प्रचण्डचण्डदीधितिः
स हे सुभाषचन्द्र वीर जीवसीति भाति मे ।
यतस्त्वदीयनामपूतलोककण्ठनिःस्वनाः
सुमाधुरीभराः स्वनन्ति वङ्गदेशभूमयः ॥६॥

विभिन्नसम्प्रदायजातिवर्णभेदभञ्जको
भुवि स्थिताः समाः समग्रमानवाः समानजाः ।
शरीरमेकमेकमेव आत्मतत्त्वमिष्यते
जुघोष यः स गान्धिरद्य भारतेन गीयते ॥७॥

न येन दण्डखण्डितेऽपि विग्रहे विदेशिभिः
स्वदेशमुक्तियुद्धप्राङ्गणान्मुखं निवर्तितम् ।
न यस्य लुप्यते स्वनो हि सिंहनादभैरवो
ऽद्य श्रद्धया पुनर्नमोऽस्तु पञ्चसिन्धुकेसरिन् ॥८॥

न वर्ततेऽत्र वीर एक एव केवलं प्रिय
कदापि भक्तसिंहचन्द्रशेखरादयो हि ते ।
न विस्मृता भवन्ति कालपर्ययेऽपि तिष्ठति
सदा सदा जयन्ति ते विशाललोकमानसे ॥९॥

तदुत्थिता वयं निजे हि कार्यभारवाहने
भवेम दत्तमानसाश्चलेम सत्पथे सदा ।
समृद्धिमेतु येन देश एष गौरवात्मको
मुदा च यत्समुल्लसन्तु पूर्वजा युधि स्थिराः ॥१०॥

(१-२-५६)

***

# तां दृष्ट्वा सन्ध्या गता

तस्याः कुमार्यास्तु नेत्राभिरामं
दृष्ट्वा मुखं पाटलं सान्ध्यकाले ।
रागस्तु तस्या हृतः सन्ध्यया नु
तस्यास्तया वा हृतोऽहं न जाने ॥

मन्ये परं सत्यमेतद्यदस्याः
रूपेण तन्व्या भृशं लज्जितेव ।
सन्ध्या निशायास्तमिस्रामयेन
आत्मानमावारकेणावृणोद् भोः ॥

***

(११-७-५६)

# मानिनि त्यज मानम्

शीतलाश्चन्द्रकिरणाः ।
मधुमासस्यागमः ।
प्रफुल्लानि कुसुमानि ।
मन्द उन्मादकः समीरः ।

एकेनापि प्रिये,
कामदाहो वृद्धिमाप्नोति,
किमुत परम्परया तेषाम् ।
त्वं च मानं करोषि,
मुग्धे, प्रसीद ।
कालो याति,
मानं त्यज,
एहि ।

अंगानि मे शीतय,
मन्दो येन भवेत् कामदाहः ।
विलम्बं मा कार्षीः,
एहि मानिनि,
एहि ।

पश्य, भीतस्तव मानादपि,
अस्तंगतो दिवाकरोऽयम् ॥

(९-२-६०)

***

# एहि प्रिये पश्य हिमस्य शोभाम्

एहि प्रिये पश्य हिमस्य शोभां
शैलेषु नीलेष्वभ्रंलिहेषु ।
मनोरमा येषु जलस्य धारा
माला द्रुमाणामुपत्यकासु ॥

क्वचिद् विदूरे तु प्रभातकाले
बालारुणेन प्रभासितानि ।
हिमाद्रिश्रृङ्गाणि सुवर्णवन्ति
राज्ञां किरीटानि भान्ति तानि ॥

मध्याह्नसूर्यस्य प्रचण्डभासा
तान्येव श्रृङ्गाणि दीपितानि ।
सन्तप्तहेम्नस्तु पिण्डानि मन्ये
उद्धृत्य केनापि स्थापितानि ॥

सान्ध्यप्रभा ताम्रवर्णा घनेभ्यो
लज्जाऽवगुण्ठागता तरुण्याः ।
अर्द्रमुखे भाति तेजोमये सा
भर्तुर्मुखे नु प्रतिबिम्बितेव ॥

(१७-६-६०)

***

# चल एकाकी

गुञ्जन् पर्वतकुञ्जे विजने,
अहर्निशं यश्चलति निर्झरः ।
कथयति कलकलशब्देनासौ
चल एकाकी चल एकाकी ॥

रूपं चपलं धृत्वा धावन्
फेनैर्विशदं हासं कृत्वा ।
बोधयतीव कुरु त्वं कार्यं
सहस्व क्लेशमपोह हसित्वा ॥

मार्गे यद्यपि तव बाधाः स्युः
शत्रुर्यद्यपि स्यात् सन्तापी ।
मा भैषीस्त्वं चल रे चल रे,
चल एकाकी चल एकाकी ॥

(२६-६-६०)

***

# कुलालचक्रं मनुष्यः

स्वयं न चक्रं करोति कुम्भं
न तस्य बुद्धिर्न चित्तमेव ।
यथा च तद् भ्राम्यते निरूप्य
स्वचित्तग्रामे विचित्ररूपं
घटस्य कर्त्रा दिने निशायाम्
तथैव निर्मात्यदः पदार्थान् ।

तथा न किञ्चित्करो मनुष्यः
कयापि शक्त्या स प्रेर्यमाणः ।
निमेषमात्रं च कार्यजातं
करोति तस्या निमित्तभूतः ॥

(१२-६-६०)

★★★

## जीवननाटकम्

धरित्री इयं रङ्गशाला मता मे,
विभिन्नरूपाणि च जीवितानि
विभान्त्यत्र चित्राणि रूपकाणि
भवन्ति सर्वेऽभिनयाय एव
ते ते जना नाट्यकथाप्रसङ्गे ।
कश्चिच्च भाग्येन राजा, तथैव
भवत्येव रङ्कोऽप्यन्यो धनेन ।

परं शरीरं तयोरभिन्नं
परस्तयोरेक एवान्तरात्मा ।
अपनीय दृश्यानि सर्वाणि तानि
शरीराद् बाह्यान्याच्छादनानि ।

समाप्तिं गते नाटके जीवनाख्ये
यदान्तमाप्नोति तदा न किञ्चित् ।
न वित्तं न रूपं न वर्णो न जातिः,
सर्वं तदेकम्, मनुष्यः, शरीरम् ।

(१२-१०-६०)

***

# मानस त्यज संसारभयम्

मानस त्यज संसारभयं
कुरु विश्वात्मन्येव लयम् ।

यावत् तव विषयेष्वासक्तिर्
यावच्चैव ममेदमिति रतिस्
तावत्त्वं भवसि न मुक्तः
लाभालाभभयेन विभुक्तः ॥

समो द्वन्द्वेषु सुखे दुःखे
भव सर्वास्ववस्थासु च ।
तदैव मुक्तिं परमां शान्तिम्
अधिगमिष्यसि चैवानन्दम्

मानस त्यज संसारभयम्...

(१४-१०-६०)

***

# नमो विवेकानन्दाय

येन दुःखे सुखं दृष्टं तापसवेषधारिणा ।
नमस्तस्मै नरेन्द्राय विवेकानन्दस्वामिने ॥१॥



विदेशे भ्रमता येन भारतीयं च दर्शनम् ।
विश्वशान्तिप्रदं शुद्धं महर्षिणा प्रकाशितम् ॥२॥

वयं प्रबोधिता येन स्वातन्त्र्यसुखहेतवे ।
ब्रह्मचर्यप्रकाशाय महते तेजसे नमः ॥३॥

वाणी यस्य मुमुक्षूणां लोकयात्रार्थिनां तथा ।
महती प्रेरणा नित्यं पीयूषवत्, नमामि तम् ॥४॥

# पतनमेव चलनम्

ये ये चलन्ति ते सर्वे पतन्ति,
परं ये हसित्वापि भूयश्चलन्ति—
पतित्वा पुनश्चापि उत्थाय यान्ति,
त एव यान्ति त एव यान्ति,
त एव सम्यक् लक्ष्यं लभन्ते,
लब्ध्वा च लक्ष्यम् अन्ते रमन्ते ।

अन्ये पतित्वा न ये प्रबुध्य,
पुनश्च उत्थाय न ये चलन्ति—
मार्गे तथा ते हि सदा भवन्ति ।
न तत्र लक्ष्यं न तत्र भक्ष्यं
नरकं पृथिव्यां वराका लभन्ते ।

अतस्त्वमेकं धारय धैर्यम् ।
कुरु निजकार्ये सततं स्थैर्यम् ॥

(१७-१-६१)

***

# नैसर्गिकी च प्रतिभा

प्रश्नोऽयं जायते हृदि बहुधा—
किमहं शक्नोमि गातुम् ?
किमहं शक्नोमि कर्तुं काव्यम् ?
किं वा निर्मातुं मूर्तिं वा चित्रं वा किमपि वा
काष्ठेन अथवा वासः सूच्या सूचिकारस्य ?

तदा च बुद्धिः प्रतिवदति—
किं न शक्यते कर्तुं त्वया
किं न ज्ञायते गुरुचरणसेवया ?

परं नानुमोदते मनस्तत्
गाने तादृशः स्वाभाविकः स्वरः कथं स्यात् ?
कथं वा स्यात् काव्ये तादृशी सहजा प्रतिभा ?
कथं मूर्तौ प्राणाः मूर्तिकारस्य ?
कुतो विचित्रो वर्णसंयोगश्चित्रकारस्य ?
कथं च वार्धकेः स परिष्कारः ?
कथं वा सिवने स्यात् तद्विधम् सौक्ष्म्यम् ?

(५-२-६१)

***

# मेघः

अद्रेः कदा मेखलीभूय पश्चात्
तस्यैव वक्षःप्रदेशे नदीव—
स्थित्वा पुनश्चापि उच्चैर्विशङ्कम्
शृङ्गे च शृङ्गं द्वितीयं विभाति ।।

संयोजयंश्चापि शृङ्गेण शृङ्गम्
सेतुं निराधारमयं करोति ।
सिन्धुर्महानेष विस्तृत्यदूरात्
आत्मानमाकाशपृथ्व्यौ युनक्ति ।।

मेघोऽयमेवं विभिन्नैः प्रकारैः
क्रीडन् गिरौ कामचारी प्रसन्नः ।
वृष्ट्या जनानां श्रमस्यापहर्ता
सत्यं श्रुतः कामरूपो मघोनः ।।

***

(२६-५-६१)

# आश्चर्यम्

बहुधाहं चिन्तयामि,
(चिन्ता च सा मनो मे क्लिश्नाति)
कथं द्वे चित्रे एकस्या एव प्रकृतेः
उपस्थिते भवतो नेत्रयोरग्रे युगपत् ।
कथं प्रकृतिरेका या मोहिनी मृदुला
भवति रुद्रा, उग्रा कठोरहृदया ?
यथा कश्चित् मूढश्चित्रकारः
स्वेनैव करेण एकेन मृदुना
तूलिकया निर्माय चित्रं
मनोहरं रुचिरवर्णम् आह्लादकम्,
अपरस्य करस्य दृढाभिरङ्गुलिभिः
तदेव नाशयेत् मर्दयेत् नृशंसैर्नखैः सकलम् ।
एवंविधया तयापि प्रकृत्या
उद्यानानि मनोहराणि
कोमलकमनीयकुमुदमृदूनि

निर्माय शरीराणि शिशूनाम्
अङ्गनानां वाचि मधुराणाम्,
सरितो, हिमश्रृंखला हिमालयस्य
सुन्दरान् पक्षिणो विविधवर्णान्
स्वकीयैरेव बहुविधैरुपकरणैः
दुर्भिक्षभूकम्पयुद्धादिभिः
क्षणेनैव ध्वस्यते निखिलम् ।
न जाने किमवशिष्यते ।

(३०-७-६१)

***

# चल सुपुत्र

राष्ट्रवीर ! हे सुधीर !
चल रे चल रे चल सुपुत्र !
मनसि निश्चयस्तव
भवेदसंशयो भव ।

अतीतगौरवं विलोक्य
शक्तिमात्मनो विलोक्य,
आपदासु अप्रतिम
पथि कदापि मा विरम ।

इयं स्वतन्त्रता त्वया
पूर्वजश्रमार्जिता,
दुःखे सुखेऽसुभिः सदा
रक्ष्यतां विपद् यदा !

त्वमेव भारतीयशः
चेष्टितेषु तव वशः ।
त्वं हिमालयो दृढः
त्वं गभीरसागरः ।

(२६-८-६१)

***

# ऋणपिशाचः

ऋणं दद्यान्न वा कुर्यात् तेन किंचिन्न लभ्यते ।
दातारं चापि हर्तारं हन्ति युगपदेव हि ।।

मित्रं मित्रस्य शत्रुः स्यात् भ्राता भ्रातुः सुतः पितुः ।
हृदिस्थं नाशयेत् स्नेहं भिन्द्याद् बन्धून् सुसंस्थितान् ।।

मनःस्थामपि शान्तिं च हरेदृणपिशाचोऽयम् ।
विशेषेण हि सद्दातुर् यो नेच्छति स्वयमृणम् ।।

त्वद् गृहीतं मया पूर्वं तेन मत्तदनन्तरम् ।
ऋणमन्येन तस्माच्च शृङ्खलैषा न छिद्यते ।।

(८-११-६१)

# कर्मशः उष्णता

अहो घोरतमोमयो वेला इयम्
न चन्द्रो न तारा न दीपाः पार्थिवा एव
सेयं कुहेलिका
करोति अन्धं दृष्टिवन्तम् ।
शीतं च सङ्कोचयति शरीरमिव त्वचम्
आत्मन्येव यतते लब्धुं प्रवेशं
गृहस्थोऽपि मानुषः,
परं गृहस्थस्यैवैषा दशा ।

गच्छति पथि यदि, कुरुते च कर्म, श्वसिति, चलति
न तावत् कुहेलिका न तमो न शीतम् ।
किञ्च मानुषा एवास्यां वेलायां
कुर्वन्ति कर्माणि बहुजनहितानि
बहुजनसुखानि
निर्मान्ति भवनानि, मार्गान्
कृषन्ति क्षेत्राणि वपन्ति बीजानि वितरन्ति सस्यानि ।
न तेषां तमिस्रा
न शीतेन कम्पः,
न ते अन्धभूताः
शरीरं न भग्नम् ।
सदा कर्मणा लोकमुपैति ऋद्धिः ॥

(२१-१२-६१)

# हिमप्रसारः

महानयं भाति हिमप्रसारः
सितेषु चन्द्रस्य करेषु येन ।
कृतानि शृङ्गाणि नगस्य सद्यः
किरीटवन्तीव च राजतानि ॥

उड्डीयमाना उपत्यकासु
भानोः प्रकाशे प्रदीप्तपक्षाः ।
येन स्वबिम्बेन पश्य मृद्वि
काकाः प्रसन्नाः कृता बकाश्च ॥

घनद्रुमैः श्यामभूते गिरौ सा
आकुञ्चिता यस्य रेखा विभाति ।
प्रिये तव श्यामवेण्यां कृतेव
सुकोमला नूतना कुन्दमाला ॥

अयं रविः पश्य करैः सुवर्णैः
उषस्सु सन्ध्यासु मनोहरासु ।
उदारचित्तो नृप एव यस्मै,
प्रवाहयन् हेम मुदम् उपैति ॥

(२५-१२-६१)

***

# न जायते तृप्तिः

उन्मीलिते नयने यदा मे
आयुषः सुवर्णायामुषसि
तदा मे नेत्रयोरग्रे
सुविस्तृतं गगनं नीलवर्णम्
अशोभत प्रकृतिनटी च प्रफुल्लयौवना
गिरेः प्राङ्गणं विविधरूपं विविधवर्णं
निर्झरकलकलनादितं विहगकलरवगुञ्जितं
सुविशालं मनोहरम्
क्षणे-क्षणे नवतामुपेतं दृष्टं मया।
अहो सा सुषमा प्रकृतेः।
गगनचुम्बिनां तरूणां सौम्यत्वम्
विशालता शिलातलानां,
धरण्याः प्रसन्नायाः पुष्पावगुण्ठितायाः
उत्सङ्गस्य सौकुमार्यम्।
सर्वेण तेन हृदि मम सौम्यसुकुमारभावाः सम्भाविताः।
स्वच्छन्दगत्या सोन्मादानामिव
प्रवहतां निष्यन्दानां सकाशात्
शिक्षितं मया स्वतन्त्रचरणं मन्ये
न मार्गे केवलं विचारेष्वपि।
रक्तभूतेन सन्ध्यासु प्रतीच्यनभसा

मनसि मे अपारोऽयं
रागः सञ्चारितः किम् न जाने !
रजनीषु गृहस्य गवाक्षात्
दृष्टा मया शिखरेषु सानुषु उपत्यकासु गभीरासु
कौमुदी हिमकरस्य नेत्रयोरञ्जनमिव
कृष्णपक्षे चापि व्योमपटे
चित्राङ्कितानीवाद्रिश्रृङ्गाणि
स्थितानि यथा दैत्या घोरकर्माणः।
प्रतिपल्लवमविज्ञात इव कश्चित्
प्रकृतिकामिन्याः सन्देश उद्घाटितो मे
सम्मोहित इव च तमवेक्ष्य
भिन्नानि रूपाणि द्रष्टुं प्रकृत्याः
गतवान् शिखराणि, नदीतटानि, विततांश्च मार्गान्
परं किं करवाणि,
तृप्तिर्न जायतेऽधुनापि ।

(२६-१२-६१)

***

# भावप्रवाह:

नदी भावनाद्भिः परिप्लाविता सा
न मार्गविरोधं कदाचित् सहेत ।
इयं बुद्धिशैलं समुल्लङ्घ्य पूर्वं
मनःकायवाचं प्रवाह्येव गच्छेत् ॥

मनुष्यं प्रवाहोऽयमावेगहेतोः
कदाप्युन्नयेत् पातयेच्चापि स्वैरम् ।
दयास्नेहकारुण्यवेगेन तुङ्गं
भयक्रोधवैरादिवेगेन निम्नम् ॥

(४-२-६२)

# पुष्पं भ्रमरः सस्यम्

विकसति पुष्पं
स्मयते स्वयम्
अन्यांश्च हर्षयति मधुरम्,
वितरति सुरभिं जगते
मधुकरेभ्यो मकरन्दम् ।
द्वे दिने जीवनं कृत्वा
पतति भूतले चूर्णितम्,
पत्रं पत्रं यथा भिन्नम् ।
एतावत् पुष्पस्य जीवनम् ।

चुम्बति कलिकां कलिकां
विविधवर्णां सुकोमलां
पिबति रसं कोशतस्तस्याः ।
मधुसंचयं करोति बहुमेव
गुञ्जति कलमुन्मत्तः ।
कदापि च कण्टकेषु संग्रथितः
चूर्णपक्षः पतति भूमौ,
अथवा कमलसम्पुटे

बन्दीभूय त्यजति प्राणान्—
एतावत् भ्रमरस्य जीवनम् ।

उद्भवति वसुधाजनन्याः
अङ्के क्षुद्रमतीव क्षुद्रम्
बहवो यथा विद्रुमप्ररोहाः,
वर्धते, फलति, छिद्यते,
पिष्टमन्नं च पच्यते ।

क्षुधामुपशमयति जीवानाम् ।
एतावत् सस्यस्य जीवनम् ॥

पुष्पं भ्रमरः सस्यम्—हसितं गीतं क्षुधोपशमनम् ।
महदहो सर्वोपकारित्वम् ॥

(१४.२-६२)

***

# सर्वो मनसो व्यापारः

सिन्धोरुत्तालतरङ्गेष्वनवरतं जायमानेषु
नृत्यत्सु फेनायमानेषु
श्रूयते गीतं सुधामधुरम्
अतिभैरवश्च घोषो हृदयविदारकः ।
नीलेषु मेघेषु मन्दं प्रयातेषु
प्रभूतेन भारेण पयसां नतेषु
श्रूयते स्निग्धगम्भीरघोषः
प्रहता यथा मुरजाः,
भीषणं चापि गर्जनं हृत्कम्पनम् ।
बहूनि भवन्ति रूपाणि एवम्
वर्तते यदवस्थं मनः ।
मुदिते मनसि हसन्ति पुष्पाणि
नृत्यन्ति सरितो
गायन्ति कलरवा निर्झरा, निखिलं सुखम् ।
परन्तु शुचमापन्ने मनसि
तान्येव पुष्पाणि भवन्ति शूलानि,
सरितो वहन्ति यथाश्रुधाराः,
धुन्वन्ति शीर्षं निर्झराः
शिलासु मर्माहता यथा—दुःखं महत् ।

***

(२७-३-६२)

# परमाणुध्वंसः

मानवकृतपरमाणुविस्फोटविध्वंसव्याधिव्यामोहिता
कम्पमाना शरीरेण भृशं क्लेशिता,
चचालैव यावद्धरा ।

तदुरस्स्थानभूतो हिमाद्रिर्विदीर्णः,
पतितैश्च पाषाणखण्डैस्ततः
अवरुद्धमार्गास्तटिन्यो बभूवुर्,
वनोपान्त आच्छन्नरजोमेघवृन्दः ।

हा हा धराया हृदयं विदीर्णं,
विश्वं तमः सर्वमेतत् गतं च ।
किं सा धरा स्यात् तथैव भूयो
दद्याच्च रत्नानि मनुजायनित्यम् ?

(१४-४-६२)

***

# मृद्वी धरा—कठिन उपलसङ्घः

तवोत्सङ्गे मातर्मधुरसलिलाः पुण्यसरितः
शुभं शस्यं नृत्यत् ललितहरितः संस्तर इव ।
समृद्धिः पुष्पाणां विविधरसवर्णा प्रमुदिता
परं नैतज्जाने कथमुपलसङ्घोऽपि कठिनः ।।

तवायं मन्येऽहं सुतकृतमिथोयुद्धजनितो
महान् यः सन्तापः प्रतियुगमभून्मानसपुटे ।
स विस्फोटस्थानं बहुश इव लब्ध्वा जववशात्
घनीभूतो भूतः उपलसमुदायोऽतिकठिनः ।।

(१७-४-६२)

# चल रे पथिक

चल रे पथिक त्वया चलितव्यम्
चलनमेव तव धर्मः ।
स्थैर्यं यत्र हि तत्र जडत्वम्
गत्या रवेरपि घर्मः ।।

नित्यं पश्य सरित्प्रवाहो
हृष्यति सुखयति लोकम् ।
नृत्यरतानि पत्रपुष्पाणि
हरन्ति निखिलं शोकम् ।।

भ्रमति भ्रमरो यस्तु सर्वदा
करोत्यसौ मधुलाभम् ।
न च भ्रमति चेत् मृगराजोऽपि
न स कुरुते मृगलाभम् ।।

(१-६-६२)

***

# देवदारवः

आलिङ्गितुं गगनमुत्कण्ठिताया
भूमेरुदग्रा करा इवासंख्याः
अथवा न पतत्यधो गगनं
रविचन्द्रतारकगणमयमिति देवैः
संस्थापिताः स्तम्भा अनन्ताः
देवदारवो यूयम् ।
न च सिञ्चति कश्चिदुद्यानकारः
जलयन्त्रधाराभिरेव युष्मान्,
विजने वने तपस्विन इव तिष्ठथ
किमभीष्टं वो न जाने ।
सहध्वे क्लेशान् नैकविधान्
झंझावातम्
तुषारपातम्
घोरवृष्टिं
तडित्प्रहारम् ।
वितरथ छायां सुरभिम् ।

(९-६-६२)

★★★

# प्रकृतेराह्वानम्

एहि प्रणयिनि न कुरु विलम्बम्
पश्य पश्य त्वं घनावृताद्रिम् ।
अत्र पृथिव्या नभः संगतम्
तथा भवेताम् हृदये अपि नौ ॥

वनेषु वाता वहन्ति सुखदा
आह्वयन्ति ते श्टृणु आह्वानम् ।
संगीतमेतत् प्रकृतेर्मधुरम्
एहि तया सह क्रियतां गानम् ॥

(२०-६-६२)

***

# देववाणी

हे देववाणि त्वमेव माता
पश्याम्यहं त्वां सर्वासु दिक्षु।
सर्वे जनास्तव समा भवन्ति
यथा धनाढ्यस्तथैव भिक्षुः ।।

प्रदेशभेदान् दूरीकरोषि
समं प्रपोष्य पुत्रीः स्वकीयाः।
पिबन्ति सर्वास्तवैव दुग्धं
नैवेह काचिद् या न त्वदीया ।।

त्वं भारतस्य विश्वस्य एव
संयोजयित्री स्मृताऽसि देवि
विकार्य त्वां रे स्वयमेव प्रथमं
ततोऽपरिज्ञाय युध्यन्ति लोकाः ।।

यदा लभन्ते तव प्रकाशं
तदा तु सर्वान् विहाय भेदान्।
मिथश्च संगम्य बन्धूभवन्ति—
मातर्मनुष्यान् करोषि देवान्।

(२२-६-६२)

***

# नवीनकवेः विवशता

विश्वं पुरातनं जातं
पूर्वकविभिर्वर्णितम् ।
नवीनः किं कविः कुर्यात्
नास्ति तद्विषयो नवः ॥

बाणोच्छिष्टं जगत् सर्वं
स्पृष्टं च कालिदासेन ।
नवीनः किं कविः कुर्यात्
भक्षितं भवभूतिना ॥

यदीहाधुनिकैः किञ्चित्
लिख्यते कविभिर्नवम् ।
नवीनास्ते हि किं कुर्युश्
च्छेकैश्चोरितमुच्यते ॥

(८-७-६२)

## नवमानवः

अहमस्मि परिवृतस्तरङ्गैः सागरस्य रूढीनाम्
अहमस्मि बद्धो ग्रन्थिभिर्जालस्य चिन्तानाम्
अहमस्मि कुण्ठित आघातैर्मिथ्यानीतिवाक्यानाम्
आ युगेभ्यो निगडितस्यैवं पूर्वजैः
श्वसनमप्यक्षमं,
न च दर्शनं विश्वस्य लब्धुमशक्नुवम् ।

परमहमधुना नवयुगस्य प्रकाशेनास्मि नवमानवः
नवचेतना, नवबुद्धिरपि नवभावना जागरिता मयि ।
सर्वानहं त्रोटयिष्यामि बन्धान्
हसिष्यामि गास्यामि
स्वरेणोन्मुक्तबन्धेन
स्वतन्त्रः सर्वदा ।

(१५-७-६२)

# पुरातनमानवः

परमयि भो नवमानव !
नवयुगनवचेतनानवबुद्धिसमुद्बोधित !
अस्य प्रकाशस्य प्रसृतस्य सहसा
चाकचक्येन महता
मा भून्नेत्रयोर्ज्योतिरवरुद्धम् ।
अन्धत्वं मा भूत्तवाविश्वासस्य ।

उत्तिष्ठ त्वं जागृहि भव स्वावलम्बी
कुर्वात्मनि विश्वासं
परिहर नैव विवेकम् ।
शलभा अपि प्रकाशेनैव
कुर्वन्त्यात्मविनाशम् ।

(१६-७-६२)

***

# परिवर्तनम्

मम चलनमेव जगतः परिभ्रमणं
सुषुप्तिरहो जगतो मम शयनम् ।
मम करप्रसारस्ताण्डवनृत्यं
ममाट्टहासे रोदिति विश्वम्
जागरणं मम यदा तदाहम्
नगाधिराजान् पिनष्मि सहसा
भिनद्मि दुर्गान् छिनद्मि बन्धान्
क्षुणद्मि पृथिवीं युनज्मि सिन्धून् ।
तृणेह्मि लोकं प्रत्येकमेव,
सर्वे समा मम प्रहारकाले
गुरुर्न कश्चिद् न कश्चिदल्पः
स्वैरां गतिं मे न रुणद्धि कश्चित् ।
मामैतिहासाः परिवर्तमाहुः
अहं शाश्वतोऽहं महाकाल एव
भवामि तावत् पुनःसृष्टिहेतुः
नवं प्रियं मे पुराणं न किञ्चित् ।

(३०-७-६२)

★★★

# बीजं न म्रियते

ये एते हरिताः सुशीतला बहुवर्णकुसुमाः सुरभिताः
बहुगुणाः फलिताः खगनीडीकृताः
विलसन्ति पादपाः,
तेषां जन्मदानि बीजानि यानि
किं तेषामभवत् मृतानि जीवन्ति वा ?
शीर्णानि तानि भूमौ
मृत्तिकाभूतानि,
न मृतानि तावत्-
अन्यानि भविष्यन्ति भूयांसि
पादपेभ्यस्तेभ्य एव ।



(१२-८-६२)

***

# शरच्चन्द्रः

चारुचन्द्रं प्रिये पश्य त्वम्
इयं कौमुदी तस्य शारदी ।
क्षीरस्नाता नता धरायां
यया कृतेयं नदी राजती ।।

तस्याः लासस्तव गात्रेषु
सख्या इव यो मधुराश्लेषः ।
अलौकिकीं ते वितरत्याभां
नवो यथा स्यात् कुन्दोन्मेषः ।।

पश्य दोलिता नवा वीचयः
शतधा शशिबिम्बं कुर्वन्ति ।
नभसस्तव चरणावाश्लेष्टुं
चन्द्रा इव बह्वोऽवतरन्ति ।।

(१३-८-६२)

***

# उद्बोधनम्

अशेषमातृभूमिरक्षणव्रते स्थिरो भव
भव प्रबुद्धमानसो न शोभते हि विश्रमः ।
यदा कृतघ्नलम्पटः प्रवृद्धशक्तिराक्रमं
रिपुस्तनोति सीमसु प्रचण्डज्वालवह्निवत् ।।१।।

भवन्तु घृष्टपिष्टचूर्णिताङ्गसैनिकाः पराः
पराभवक्षपाविलुप्तधैर्यछद्मसाहसाः ।
त्यजन्तु ते धरामिमां विदेशितन्त्रमोचिताम्
असृग्द्रवप्रतर्पणं नयन्तु वा पिपासिताम् ।।२।।

धनञ्जयं कपिध्वजं दशास्यघातकं शिवं
शिवं च छत्रधारिणं प्रतापसिंहविक्रमम् ।
न विस्मर प्रभञ्जनो भवारिसैन्यनाशने
न यावदेति मृत्युरेव युद्धभूर्न त्यज्यताम् ।।३।।

पुमान्न यस्त्यजेदसूनपि स्वदेशहेतुना
स्वतन्त्रता न यत्प्रिया न तस्य जीवनं वरम् ।
अतो भव त्वमुद्यतो रिपुं भुवि प्रपातय
स्खलन्न येन वर्धते पुनः स भूमिसात्कृतः ।।४।।

यदि प्रकम्पते गिरिश्चलत्यधो वसुन्धरा
सचन्द्रसूर्यमण्डलं पतत्यधो नभः पुनः ।
तदापि न स्खलत्यहो स्वदेशरक्षको युवा
निजायनस्थितो दृढं क्षुणन् द्विषद्दलं बली ।।५।।

नगाधिराजदेवतात्मनः शिरः समुन्नतं
सहेत कः कृतं द्विषत्पदाभिघातपांसुलम् ।
असृक्समुत्क्वथद्विलक्षणं करोति चेष्टितं
शरीरमद्य चेष्टितुं विचित्रमेव जृम्भते ।।६।।

हिमाद्रितुङ्गशृङ्गतः शिवस्तपः परित्यजन्
तपोनिरोधरोषणस्फुरत्तृतीयलोचनः ।
प्रनृत्तकण्ठपन्नगः प्रवृत्तचण्डताण्डवः
प्रकम्पयन् द्विषस्त्विषा भुवि प्रपातयेद् द्विषः ।।७।।

(२३।२९-१०-६२)

# कालः कर्म च

दिनं गणयन् सप्ताहं मासं वर्षं तथैव च ।
त्वरितं यात्ययं कालो मनुष्यस्तु करोतु किम् ॥

महदिदं कर्मक्षेत्रं स्वल्पमेव च जीवितम् ।
पूर्तिं जीवनेनैकेन कर्म यातु कथं पुनः ॥

अतः पूर्वजा अस्माकं न मृत्युमाहुरन्तकम् ।
स मृत्युनापरं जन्म प्राप्नोतीति न संशयः ॥

न च मनुष्यो नैराश्यं कथंचिद् यातुमर्हति ।
यदत्र न गच्छेत् पूर्तिं तत्र सम्भाव्यते हि तत् ॥

तस्मात् कर्म न त्यक्तव्यं कर्त्तव्यं च यथाबलम् ।
कृते कार्ये परं मृत्योरीषदल्पं भविष्यति ॥

(१५-११-२६)

***

# वयं भारताः

उरसि वयमुदारान् विश्वबन्धुत्वभावान्
उपनिषदनुशिष्टाः सर्वदा पोषयामः ।
परमवहितमेतद् धार्यतां भोः कृतघ्नाः
इह जननिविमानं नैव सोढुं समर्थाः ।।

यदि सगरलनेत्रः कश्चिदेतां विमूढो
गतनिजभवचिन्तः पश्यति प्राणभूताम् ।
सपदि समरभूमौ लब्धगीतोपदेशाः
कुपितरुधिरनेत्रास्तस्य नेत्रे खनामः ।।

पदमपि यदि कश्चिद्वर्धते तां जिघृक्षुर्-
युगपदखिलविश्वं कम्पयामः पदेन ।
शिरसि दुरभिवृत्तं तं प्रहृत्य क्षणेन
गहनमिव भुवोऽधश्चूर्णितं प्रापयामः ।।

(२९-११-६२)

***

# प्रकृतेर्वैभवम्

बन्धो प्रकृतेः पश्य वैभवम्
रात्रावपि यन्नैव क्षीयते ।
अन्धे तमसि प्रतिक्षणं यत्
भूयोऽमितमेवोपचीयते ॥१॥

तारा: संख्यातीता गगने
मन्ये नयनानि ताः कस्यचित् ।
यस्तु निमेषैर्निश्शब्दं नो
निद्रापयतीवोर्वीक्रोडे ॥२॥

भूमानं चेद् द्रष्टुमीहसे
सततानन्दप्रवाहमेतम् ।
गेहद्वाराण्यपावृत्य भोः
एहि बहिः शिर उन्नमय स्वम् ॥३॥
(२०-१२-६२)

***

# फलति बीजं भूमौ लीनम्

भूमौ यदा लीनतां याति बीजं
वृक्षप्ररोहस्तदा सुन्दरः स्यात् ।
एवं मनुष्या यदा देशभूम्या
कुर्वन्त्यभेदं तदा वर्धते सा ॥

यन्मे शरीरं तदस्या जनन्याः
यन्मे मनस्तद्व्रतं तद्विचारे ।
अस्याः कृते जन्म चैतन्ममाभूत्
मृत्युस्तथा चापि अस्यै भवेन्मे ॥

(८-२-६३)

# अनुसन्धानम्

किमेतद्‌ध्यनुसन्धानमात्मनो वाभिसन्धानम् ।
तद्वा पराभिसन्धानं चिन्तयामीति विस्मितः ॥

शोधोऽयं प्रतिशोधो वा यो मयि विधिना कृतः ।
बुद्धेर्जनयति भ्रान्तिं मृगतृष्णा गवेषणा ॥

बुद्धिर्निगडितैकस्मिन् कोष्ठे विश्वाद् विभिद्यते ।
कूपस्थमिव मण्डूकं सा जनं परिणामयेत् ॥

मोचितोऽपि जनस्तस्याः पाशैर्वशीकृत इव ।
नान्यत्र मन आधत्ते तदयोग्यो भवत्यसौ ॥

(२१-२-६३)

***

# कङ्कालस्य सौन्दर्यम्

दिगम्बरस्य भो यत् सौन्दर्यं
तरुं पृच्छ तत् पत्रविहीनम् ।
प्रसार्य बाहूनहर्निशं यः
तप इवाचरत्युन्मुक्तः सन् ।।

कङ्कालोऽयं कालपरिणतो
व्यतीतमाख्याति तस्य वैभवम् ।
परोपकारयज्ञे यद् हुत्वा—
सावशिष्टं होतुमुद्यतः ।।

न गोपनीयं न चापि रक्ष्यं
न चास्य झंझावातैर्हानिः ।
आत्मनिष्ठो योगीव सिद्धः
अहो नैश्चिन्त्यमहो समाधिः ।।

रसहीनोऽयं यदा ज्वलिष्यति
लोकानखिलान् प्रभासयिष्यति ।
तदस्य तेजो यत् सौन्दर्यं
तच्चैवान्ते लोकोपकारि ।।

(३-५-६३)

***

# त्वयि जीवनम् आश्रितम्

मम सकलमपि जीवनं प्रिये
तव दिवसमेकमेव निर्दये ।
एष तिष्ठामि पथि पिपासितः
तव दर्शनेन यदि गतिं लभे ॥

वयमत्र विना त्वया हे कथं
जीवाम इति किं प्रतिभाति ते ।
ननु मधौ गते क्व खलु षट्पदः
कलिकैव वेत्ति, न तु तन्मधुः ॥

(१६-५-६३)

***

# विरोधः कथम्

(अत्राद्यः श्लोको रात्रौ स्वप्ने क्वचित् सभायां कयापि कवयित्र्या पठितस्तदा च तदुत्तरं पृष्टेन मया द्वितीयः श्लोक उदाहृतः)

क्वचित् पश्य लोके सुमहान् जलौघो
न किन्त्वत्र कश्चित् पिपासुः पिबेद्यः ।
अन्यत्र तावन्न सलिलस्य बिन्दुः
परं तत्र सर्वे तृषिता रुदन्ति ।।

किमत्र चित्रं सुमुखि प्रवृत्तं
तथाविधं ह्येव जगद्विधानम् ।
विसृज्य लोकाश्च सुखं विदूरं
रुदन्ति मग्ना मृगतृष्णिकायाम् ।।

(२४-५-६३)

* * *

# ममाभिलाषः

श्यामघनच्छायासु
वहति मत्तपवने सुरभिते
नृत्यत्सु प्रांशुचीडद्रुमेषु,
सर्वतः शान्तसुशीतले गिरौ
कस्य न विचलति चेतः !
अहमपि लेखितुकामः किञ्चित्
किञ्चित् प्रणयविषये
यस्योच्छ्रायस्तुङ्गहिमाद्रेः शिखरमप्यतिक्रामति
गाम्भीर्यं च यस्य
महतो नदीप्रपातादप्यधिकतरं मनसि विलीनम् ।
अहमद्य गातुमिच्छामि तानि गीतानि
येषां स्वरो यथा विहगानां
स्पृशत्युरो महागिरीणाम् ।
यश्च स्वरो निर्झरस्येव
प्रविशति गिरिकन्दरा इव मनांसि ।
अहमद्य विचरितुमिच्छामि द्रष्टुमिच्छामि

पर्वतान् विशालान् प्रसारितबाहून्
भुजङ्गगतिकुटिलमार्गान्
मुण्डितशिरसः क्वचित्
क्वचिच्च हरितकेशान् हरितवेशान्
मानवखगपशुनिर्झरमधुरनिनादान्
उत्तुङ्गश्रृङ्गान्
हिमहासान्
सुवर्णमुकुटानिच्छामि अद्य ॥

(१०-६-६३)

# न चारु निखिलं श्रेयः

वीणाझंकृतिमनुसर न हि न हि
मन इयमाशा तन्वी ।
इन्द्रधनुस्त्वं पश्य सुन्दरं
यत् परिहरति स धन्वी ॥

यदपि च लोके मनोमोहकं
निखिलं न हि तत् सेव्यम् ।
भवति यथार्थं यदेव रम्यं
दुर्लभमिव तत् दैव्यम् ॥

झंकृतिरियमपि या वीणायाः
स्वनति श्रुतिकमनीया ।
न यावदङ्गीभवति मदीया
न सा तदा रमणीया ॥

पश्य पश्य रे मन एतद् यत्
सौरभमिह प्रसूने ।
यदा न तन्मम हृदयं गच्छति
तदा किमस्य घ्राणे ॥

(१८-८-६३)

***

# शरत्कालः

मनोहारिवातो लसच्चन्द्रलेखः
शेफालिकोन्मेषमनोज्ञहास्यः ।
कालः प्रिये पश्य शरदि प्रसन्नः
प्रियासमाश्लेषसुखोऽल्पवस्त्रः ।।

दीर्घा न दिवसा न रात्र्योऽपि लघ्व्यः
प्रियासहस्नानमधुनोपभोग्यम् ।
यथा चन्द्रकिरणैः सरःसम्प्रविष्टैः
कुमुद्वतीभिश्च समं विभाति ।।

(२६.६.६३)

***

# भारतजननि नमस्तुभ्यम्

भारतजननि नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यम् ।
विश्वविजयिनि नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यम् ॥

गिरिराजोऽयं तव हिमहासः ।
अयं च रत्नाकरः समृद्धः ।
विविधवैभवं तव शोभ्यम् ।
नमस्तुभ्यं नमस्तुभ्यम् ॥१॥

बहुविधजनाश्च विविधा भाषाः
वदन्ति, किन्तु ते तवैव पुत्राः ।
संस्कृतिरेका तव ऐक्यम् ।
नमस्तुभ्यं नमस्तुभ्यम् ॥२॥

वितरसि ज्ञानं त्वं वेदानाम् ।
तव पुत्राननुगच्छति लोकः ।
सर्वजनहितं साहित्यम् ।
नमस्तुभ्यं नमस्तुभ्यम् ॥३॥

(८-१०-६३)

***

## विततं मार्गे को विश्रामः

उपरि विशालो गगनवितानो
नीचैर्जननी हरिता धरणी ।
धाराभिर्नद्यो मधुरास्ता
जीवनरसं ददत्यजस्रम् ॥

उत्तिष्ठ त्वं चल चल मानव
वितते मार्गे को विश्रामः ॥१॥

पश्य वारिधिस्त्वामाह्वयति
करैर्विलोलैस्तरङ्गरूपैः ।
गृहाण नौकां विमुक्तरज्जुम्
उत्तीर्यैनं चल निजमार्गे ॥ उत्तिष्ठ त्वं……॥२॥

महाशिलासंघात एष हि
पुरःस्थितस्तव नगो विशालः ।
शिलास्तदीयाः कुरु सोपानं
निवर्ततां नो चरण उत्थितः ॥ उत्तिष्ठ त्वं……॥३॥

यदा चलसि लभसे त्वं सर्वं
विश्रामेण महाविनिपातः ।
चलन् विन्दति मधुफलजातं
तस्य सुपुष्पा पृथ्वी वसुधा ॥ उत्तिष्ठ त्वं……॥४॥

(२०-१-६४)

# को दुष्टः

चन्द्रो न दीव्यति मेघावृतः ।
न च सूर्यस्तथा दुर्दिनाहतः ।
किं निर्बलः सूर्यो वा ?
चन्द्रो वापि शक्तिहीनः ?
अथवा दुष्टो घनस्तत्र ?
परमसौ निदाघतप्तेभ्यो हतप्राणेभ्यः प्राणिभ्यो
विगतरसेभ्यो म्लानेभ्यो वनस्पतिभ्यो
महावेदनया निश्श्वसन्त्यै धरायै
मधुरं ददाति जलं ! जीवनं ! महत् !
परमिदमपि भवति दुष्टमम्बु
यदा नदीषु महान् जायते विप्लवः ।
स च वृक्षानुन्मूलयति गृहाणि
निगलति लोकानतीतगणनान् ।
सर्वो मन्ये दुष्टो वा सच्चित्तो वा
सबलो वा बलहीनो वा
दृश्यते दशासु बद्ध एव ।
न च दशया दृश्यते चरित्रम् ॥

(१७-८-६४)

***

# जय देवि चाटुकारिते

व्याप्नोषि त्वं निखिलं जगत्
न खलु किमपि त्वमिव वीर्यवत् ।
न गणयसि वृत्तं न बुद्धि बलं त्वं
राज्ये च ते दास्यवृत्तं महत्त्वम् ॥

त्यक्तस्वकार्यायाधिकारिप्रशस्त्रे हिते ।
जय देवि चाटुकारिते जय देवि चाटुकारिते ॥१॥

यश्चापि त्वामद्य शरणं प्रपन्नः
स्याद् बुद्धिहीनोऽप्यसौ प्रसन्नः ।
व्यापारिवर्गेषु विद्यास्थलेषु
शिल्पेषु सर्वेषु कार्यालयेषु ॥

सर्वत्र सर्वसमे लोकमधिष्ठिते ।
जय देवि चाटुकारिते ... ... ... ॥२॥

विद्यावानपि मूढोऽवश्यं
भवति, हि गूढं देवि रहस्यम् ।
यश्चापि स्यात् कार्ये निरतः
तस्य निश्चितं प्रगतिर्विरता ॥

दर्शय मे स्वरूपं भक्तजनरते ।
जय देवि चाटुकारिते ... ... ... ॥३॥

(२८-८-६४)

# भूयो नमः कालिदासाय

ईर्ष्या स्वाभाविकी स्त्रीणां काली देवी निदर्शनम् ।
येन सरस्वती तुष्टा दासः कविस्तया कृतः ॥१॥

नमोऽस्तु कालिदासाय कवीनां गुरवे नमः ।
यत्काव्यरसपानेन मोदते मोदते मनः ॥२॥

यस्य काव्ये स्फुटं भाति सर्वं भावात्मकं जगत् ।
शक्नोमि कवये तस्मै वक्तुं श्रद्धापदानि किम् ॥३॥

पदे पदे महानर्थो घटेऽब्धिवन्निवेशितः ।
येन ध्वनिप्रवीणेन तं वन्दे कविताग्रुरुम् ॥४॥

यत्काव्याब्धिनिमग्नेन सहृदयपिपासुना ।
रत्नानि चापि लभ्यन्ते सततं पीयते मधु ॥५॥

निखिलं भारतं यस्य एकीभूतं पुराभवत् ।
योऽद्यैकः सर्वदेशस्य तुभ्यं राष्ट्रकवे नमः ॥६॥

(१०.११.६४)

# भ्रमरः कलिकां प्रति

हे कलिके ब्रूहि ब्रूहि त्वं
शुभ्रासि त्वं रुचिरवर्णा
प्रत्यङ्गं कोमलं सुरभितम् ।
दानार्थमेव जीवसि जगति,
हससि सर्वदा, लोकस्त्वामनु हसत्येव ।
अहमस्मि तावत् कृष्णवर्णो रूपहीनो
लब्धप्रसरो दशामि कञ्चित्
न ददामि किञ्चित् कस्मा अपि,
केवलमनुचूष्यानुचूष्य त्वां
त्वद्रसं पिबामि प्रतिक्षणं
गायामि मत्तः किं न जाने ।
ब्रूहि कलिके तदावयोरपि
कथं सङ्गमो जातः ।
किं तावदुत्थाप्य वातेन प्रसभं,
शुष्के पत्रे इव वात्यायाम्

आवामकस्मादेकत्र नीतौ ?
अथवा तरङ्गौ पयोनिधेर्द्वौ
मिलिताविवानिच्छयेह लोके ?
अथवा विरोधिनोरपि सङ्गमो
महदुपजनयति सौन्दर्यम् ।
मलिनमपि किं न दृष्टं त्वया
हिमांशोर्लक्ष्म तनोति लक्ष्मीम् ॥

(६१-११-६४)

***

# लौहघनस्य सङ्गीतम्

ठनत् ठनत् ठनदिति नदति यदा घनो लोहकारस्य
तदा तस्य हस्तौ शरीरं समग्रम्
आत्मापि लीयते लौहखण्डे
तप्तेन रक्तेन लौहेन साकं
मुखं लौहकारस्य तप्तं सरक्तम् ।
श्वासैः स्वकीयैः स्वेदेन सततम्
परिणमयति लौहमाकृतिषु नैकविधासु !
अहो घनजातमिदं सङ्गीतम् !
बद्धं येन मनो मनुजस्य
करोति लौहं सजीवमेव
सृजति यदिच्छति तदपि सकुशलम् ॥

(१५-१२-६४)

***

# लालालाजपतरायं प्रति श्रद्धाञ्जलिः

न येन दण्डखण्डितेऽपि विग्रहे विदेशिभिः
स्वदेशमुक्तियुद्धप्राङ्गणान्मुखं निर्वर्तितम्
न यस्य लुप्यते स्वनो हि सिंहनादभैरवो
जयत्यहो जयत्यहो स पञ्चसिन्धुकेसरी ॥१॥

न यस्य पञ्च चामरा न चैव युद्धडामरा
न यस्य खड्गभल्लचापबाणपुञ्जवैभवम्,
तथापि यो मनस्सु राजते जनस्य सर्वदा
जयत्यहो जयत्यहो स पञ्चसिन्धुकेसरी ॥२॥

महर्षिणा स्वसंस्कृतेः प्रदीपितस्य ज्योतिषः
सुरक्षकः सदाभवत् स्वदेशप्रेमज्योतिषा ।
समग्रभारतस्य यः समान एकसैनिको
जयत्यहो जयत्यहो स पञ्चसिन्धुकेसरी ॥३॥

वचस्सु वज्रदर्शनाददम्यवीर्यपौरुषात्
विना हि राज्यशासनान्नराधिपः प्रतिष्ठितः ।
न मांसभक्षको ऽपि सिंहनामको य उच्यते
जयत्यहो जयत्यहो स पञ्चसिन्धुकेसरी ॥४॥

यदीयमृत्युराङ्ग्लशासनस्य मृत्युरुच्यते
वचः प्रबुद्धभारतं हि यस्य प्राज्वलत्तदा ।
स्मृतिश्च यस्य जीवितान् करोति नः पुनः पुनः
जयत्यहो जयत्यहो स पञ्चसिन्धुकेसरी ॥५॥

अहं न ख्रिस्तपूजको न चाप्यहं मुहम्मदी
न हिन्दुरेव केवलं भवामि भारतः पुरः ।
विमुक्तसर्वधर्मभेदबन्धनः सदा युवा
जयत्यहो जयत्यहो स पञ्चसिन्धुकेसरी ॥६॥

विदर्भवङ्गकामरूपमद्रगुर्जरादयः
स्वदेशभूमयः प्रियाः अखण्डमेव भारतम् ।
अनेन दर्शनेन यः समग्रदेशकेसरी
जयत्यहो जयत्यहो स पञ्चसिन्धुकेसरी ॥७॥

नमो नमोस्तु देशमुक्तये हुतासवे नमो
जितेन्द्रियाय निर्जितद्विषे प्रमाथिने नमः ।
प्रबुद्धशुद्धयुद्धक्रुद्धमुक्तशान्तमानसो
जयत्यहो जयत्यहो स पञ्चसिन्धुकेसरी ॥८॥

(९-२-६५)

# हमारा प्रकाशन

**काव्यशास्त्रीय निबन्ध**

[परम्परा तथा सिद्धान्त-पक्ष]

मूल्य : ७ रु०

**काव्यशास्त्रीय निबन्ध**

[सिद्धान्त-पक्ष]

डा० सत्यदेव चौधरी

मूल्य : ५ रु०

**वैदिक साहित्य में नारी**

[गवेषणात्मक लघु प्रबन्ध]

डा० प्रशान्त कुमार वेदालङ्कार

मूल्य : ७ रु०

**पशु**

[मलयालम नाटक 'मृगम्' का हिन्दी-रूपान्तर]

टी. एन. गोपीनाथन् नायर

मूल्य : १.८० रु०

**रुद्रट-प्रणीत काव्यालंकार**

[हिन्दी-व्याख्या-सहित]

डा० सत्यदेव चौधरी

मूल्य : २१ रु०

**शिञ्जारवः**

[संस्कृत-कविता-संग्रह]

डा० कृष्णलाल

मूल्य : ४.५० रु०

**Essays on Indian Poetics**
Vol. I
Dr. Satya Dev Choudhary

**Rs. 10.00**